श्रीमृत्युञ्जयमानसिकपूजास्तोत्रम्

कैलासे कमनीयरत्नखचिते कल्पद्रुमूले स्थितं
  कर्पूरस्फटिकेन्दुसुन्दरतनुं कात्यायनीसेवितम् ।
गङ्गातुङ्गतरङ्गरञ्जितजटाभारं कृपासागरं
  कण्ठालंकृतशेषभूषणममुं मृत्युञ्जयं भावये ॥ १॥

आगत्य मृत्युञ्जय चन्द्रमौले
  व्याघ्राजिनालंकृत शूलपाणे ।
स्वभक्तसंरक्षणकामधेनो
  प्रसीद विश्वेश्वर पार्वतीश ॥ २॥

भास्वन्मौक्तिकतोरणे मरकतस्तम्भायुधालंकृते
  सौधे धूपसुवासिते मणिमये माणिक्यदीपाञ्चिते ।
ब्रह्मेन्द्रामरयोगिपुङ्गवगणैर्युक्ते च कल्पद्रुमैः
  श्रीमृत्युञ्जय सुस्थिरो भव विभो माणिक्यसिंहासने ॥ ३॥

मन्दारमल्लीकरवीरमाधवी-
पुन्नागनीलोत्पलचम्पकान्वितैः ।
कर्पूरपाटीरसुवासितैर्जलै-
राधत्स्व मृत्युञ्जय पाद्यमुत्तमम् ॥ ४॥

सुगन्धपुष्पप्रकरैः सुवासितै-
र्वियन्नदीशीतलवारिभिः शुभैः ।
त्रिलोकनाथार्तिहरार्घ्यमादरा-
द्गृहाण मृत्युञ्जय सर्ववन्दित ॥ ५॥

हिमाम्बुवासितैस्तोयैः शीतलैरतिपावनैः ।
मृत्युञ्जय महादेव शुद्धाचमनमाचर ॥ ६॥

गुडदधिसहितं मधुप्रकीर्णं
सुघृतसमन्वितधेनुदुग्धयुक्तम् ।
शुभकर मधुपर्कमाहर त्वं
त्रिनयन मृत्युहर त्रिलोकवन्द्य ॥ ७॥

पञ्चास्र शान्त पञ्चास्य पञ्चपातकसंहर ।
पञ्चामृतस्नानमिदं कुरु मृत्युञ्जय प्रभो ॥ ८॥

जगत्त्रयीख्यात समस्ततीर्थ-

समाहृतैः कल्मषहारिभिश्च ।
स्नानं सुतोयैः समुदाचर त्वं
मृत्युञ्जयानन्तगुणाभिराम ॥ ९॥

आनीतेनातिशुभ्रेण कौशेयेनामरद्रुमात् ।
मार्जयामि जटाभारं शिव मृत्युञ्जय प्रभो ॥ १०॥

नानाहेमविचित्राणि चीरचीनाम्बराणि च ।
विविधानि च दिव्यानि मृत्युञ्जय सुधारय ॥ ११॥

विशुद्धमुक्ताफलजालरम्यं
मनोहरं काञ्चनहेमसूत्रम् ।
यज्ञोपवीतं परमं पवित्र-
माधत्स्व मृत्युञ्जय भक्तिगम्य ॥ १२॥

श्रीगन्धं घनसारकुङ्कुमयुतं कस्तूरिकापूरितं
कालेयेन हिमाम्बुना विरचितं मन्दारसंवासितम् ।
दिव्यं देवमनोहरं मणिमये पात्रे समारोपितं
सर्वाङ्गेषु विलेपयामि सततं मृत्युञ्जय श्रीविभो ॥ १३॥

अक्षतैर्धवलैर्दिव्यैः सम्यक्तिलसमन्वितैः ।
मृत्युञ्जय महादेव पूजयामि वृषध्वज ॥ १४॥

चम्पकपङ्कजकुरवककुन्दैः करवीरमल्लिकाकुसुमैः ।
विस्तारय निजमकुटं मृत्युञ्जय पुण्डरीकनयनाप्त ॥ १५॥

माणिक्यपादुकाद्वन्द्वे मौनिहृत्पद्ममन्दिरे ।
पादौ सत्पद्मसदृशौ मृत्युञ्जय निवेशय ॥ १६॥

माणिक्यकेयूरकिरीटहारैः
काञ्चीमणिस्थापितकुण्डलैश्च ।
मञ्जीरमुख्याभरणैर्मनोज्ञै-
रङ्गानि मृत्युञ्जय भूषयामि ॥ १७॥

गजवदनस्कन्दधृते-
नातिस्वच्छेन चामरयुगेन ।
गलदलकाननपद्मं
मृत्युञ्जय भावयामि हृत्पद्मे ॥ १८॥

मुक्तातपत्रं शशिकोटिशुभ्रं
शुभप्रदं काञ्चनदण्डयुक्तम् ।
माणिक्यसंस्थापितहेमकुम्भं
सुरेश मृत्युञ्जय तेऽर्पयामि ॥ १९॥

मणिमुकुरे निष्पटले त्रिजगद्गाढान्धकारसप्ताश्वे ।
कन्दर्पकोटिसदृशं मृत्युञ्जय पश्य वदनमात्मीयम् ॥ २०॥

कर्पूरचूर्णं कपिलाज्यपूतं
दास्यामि कालेयसमान्वितैश्च ।
समुद्भवं पावनगन्धधूपितं
मृत्युञ्जयाङ्गं परिकल्पयामि ॥ २१॥

वर्तित्रयोपेतमखण्डदीप्त्या
तमोहरं बाह्यमथान्तरं च ।
साज्यं समस्तामरवर्गहृद्यं
सुरेश मृत्युञ्जय वंशदीपम् ॥ २२॥

राजान्नं मधुरान्वितं च मृदुलं माणिक्यपात्रे स्थितं
हिङ्गूजीरकसन्मरीचिमिलितैः शाकैरनेकैः शुभैः ।
शाकं सम्यगपूपसूपसहितं सद्योघृतेनाप्लुतं
श्रीमृत्युञ्जय पार्वतीप्रिय विभो सापोशनं भुज्यताम् ॥ २३॥

कूष्माण्डवार्ताकपटोलिकानां
फलानि रम्याणि च कारवल्ल्या ।
सुपाकयुक्तानि ससौरभाणि
श्रीकण्ठ मृत्युञ्जय भक्षयेश ॥ २४॥

शीतलं मधुरं स्वच्छं पावनं वासितं लघु ।
मध्ये स्वीकुरु पानीयं शिव मृत्युञ्जय प्रभो ॥ २५॥

शर्करामिलितं स्निग्धं दुग्धान्नं गोघृतान्वितम् ।
कदलीफलसंमिश्रं भुज्यतां मृत्युसंहर ॥ २६॥

केवलमतिमाधुर्यं दुग्धैः स्निग्धैश्च शर्करामिलितैः ।
एलामरीचमिलितं मृत्युञ्जय देव भुङ्क्ष्व परमान्नम् ॥ २७॥

रम्भाचूतकपित्थकण्ठकफलैर्द्राक्षारसास्वादुम-
त्खर्जूरैर्मधुरेक्षुखण्डशकलैः सन्नारिकेलाम्बुभिः ।
कर्पूरेण सुवासितैर्गुडजलैर्माधुर्ययुक्तैर्विभो
श्रीमृत्युञ्जय पूरय त्रिभुवनाधारं विशालोदरम् ॥ २८॥

मनोज्ञरम्भावनखण्डखण्डिता-
न्रुचिप्रदान्सर्षपजीरकांश्च ।
ससौरभान्सैन्धवसेवितांश्च
गृहाण मृत्युञ्जय लोकवन्द्य ॥ २९॥

हिङ्गूजीरकसहितं विमलामलकं कपित्थमतिमधुरम् ।
बिसखण्डाँल्लावणयुतान्मृत्युञ्जय तेऽर्पयामि जगदीश ॥ ३०॥

एलाशुण्ठीसहीतं दध्यन्नं चारुहेमपात्रस्थम् ।
अमृतप्रतिनिधिमाढ्यं मृत्युञ्जय भुज्यतां त्रिलोकेश ॥ ३१॥

जम्बीरनीराञ्चितशृङ्गबेरं
मनोहरानम्लशलाटुखण्डान् ।
मृदूपदंशान्सहसोपभुङ्क्ष्व
मृत्युञ्जय श्रीकरुणासमुद्र ॥ ३२॥

नागररामठयुक्तं सुललितजम्बीरनीरसम्पूर्णम् ।
मथितं सैन्धवसहितं पिब हर मृत्युञ्जय क्रतुध्वंसिन् ॥ ३३॥

मन्दारहेमाम्बुजगन्धयुक्तै-
र्मन्दाकिनीनिर्मलपुण्यतोयैः ।
गृहाण मृत्युञ्जय पूर्णकाम
श्रीमत्परापोशनमभ्रकेश ॥ ३४॥

गगनधुनीविमलजलैर्मृत्युञ्जय पद्मरागपात्रगतैः ।
मृगमदचन्दनपूर्णं प्रक्षालय चारु हस्तपदयुग्मम् ॥ ३५॥

पुंनागमल्लिकाकुन्दवासितैर्जाह्नवीजलैः ।
मृत्युञ्जय महादेव पुनराचमनं कुरु ॥ ३६॥

मौक्तिकचूर्णसमेतैर्मृगमदघनसारवासितैः पूगैः ।
पर्णैः स्वर्णसमानैर्मृत्युञ्जय तेऽर्पयामि ताम्बूलम् ॥ ३७॥

नीराजनं निर्मलदीप्तिमद्भि-
र्दीपाङ्कुरैरुज्ज्वलमुच्छ्रितैश्च ।
घण्टानिनादेन समर्पयामि
मृत्युञ्जयाय त्रिपुरान्तकाय ॥ ३८॥

विरिञ्चिमुख्यामरबृन्दवन्दिते
सरोजमत्स्याङ्कितचक्रचिह्निते ।
ददामि मृत्युञ्जय पादपङ्कजे
फणीन्द्रभूषे पुनरर्घ्यमीश्वर ॥ ३९॥

पुंनागनीलोत्पलकुन्दजाजी-
मन्दारमल्लीकरवीरपङ्कजैः ।
पुष्पाञ्जलिं बिल्वदलैस्तुलस्या
मृत्युञ्जयाङ्घ्रौ विनिवेशयामि ॥ ४०॥

पदे पदे सर्वतमोनिकृन्तनं
पदे पदे सर्वशुभप्रदायकम् ।
प्रदक्षिणं भक्तियुतेन चेतसा
करोमि मृत्युञ्जय रक्ष रक्ष माम् ॥ ४१॥

नमो गौरीशाय स्फटिकधवलाङ्गाय च नमो
नमो लोकेशाय स्तुतविबुधलोकाय च नमः ।
नमः श्रीकण्ठाय क्षपितपुरदैत्याय च नमो
नमः फालाक्षाय स्मरमदविनाशाय च नमः ॥ ४२॥

संसारे जनितापरोगसहिते तापत्रयाक्रन्दिते
नित्यं पुत्रकलत्रवित्तविलसत्पाशैर्निबद्धं दृढम् ।
गर्वान्धं बहुपापवर्गसहितं कारुण्यदृष्ट्या विभो
श्रीमृत्युञ्जय पार्वतीप्रिय सदा मां पाहि सर्वेश्वर ॥ ४३॥

सौधे रत्नमये नवोत्पलदलाकीर्णे च तल्पान्तरे
कौशेयेन मनोहरेण धवलेनाच्छादिते सर्वशः ।
कर्पूराञ्चितदीपदीप्तिमिलिते रम्योपधानद्वये
पार्वत्याः करपद्मलालितपदं मृत्युञ्जयं भावये ॥ ४४॥

चतुश्चत्वारिंशद्विलसदुपचारैरभिमतै-
र्मनः पद्मे भक्त्या बहिरपि च पूजां शुभकरीम् ।
करोति प्रत्यूषे निशि दिवसमध्येऽपि च पुमा-

न्प्रयाति श्रीमृत्युञ्जयपदमनेकाद्भुतपदम् ॥ ४५॥

प्रातर्लिङ्गमुमापतेरहरहः संदर्शनात्स्वर्गदं
मध्याह्ने हयमेधतुल्यफलदं सायंतने मोक्षदम् ।
भानोरस्तमये प्रदोषसमये पञ्चाक्षराराधनं
तत्कालत्रयतुल्यमिष्टफलदं सद्योऽनवद्यं दृढम् ॥ ४६॥

॥ इति श्रीमच्छङ्करभगवतः कृतौ
मृत्युञ्जयमानसिकपूजास्तोत्रं सम्पूर्णम् ॥